KASHMIR SERIES OF TEXTS AND STUDIES.

No. XVI.

THE

# SPANDA SANDOHA

OF

## KṢHĒMARĀJA.

EDITED WITH NOTES

BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT MUKUNDA RĀMA SHÂSTRÎ

OFFICER-IN-CHARGE RESEARCH DEPARTMENT,

JAMMU AND KASHMIR STATE,

SRINAGAR.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS LIEUT.-GENERAL MAHĀRĀJA

**SIR PRATĀP SINGH SĀHIB BAHĀDUR,**

G. C. S. I., G. C. I. E.,

**MAHÂRÂJA** OF JAMMU AND KASHMIR STATE.

---




BOMBAY:

PRINTED AT THE SHRI VENKATESHWAR STEAM PRESS.

1917.

---

श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥



काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १६

# स्पन्दसंदोहः ।

श्रीमन्महामाहेश्वराचार्यवर्य—श्रीक्षेमराजाचार्यविरचितः ।

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-

श्रीप्रतापसिंहवर-प्रतिष्ठापिते

प्रत्नविद्याप्रकाश-( रिसर्च ) कार्यालये

तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं

पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य

मुम्बय्यां

श्रीवेङ्कटेश्वराख्य-मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः ।




संवत् १९७४ क्रैस्ताब्दः १९१७

काश्मीर-श्रीनगर

॥ ॐ नमः स्वात्मामृतवपुषे शंभवे ॥

# अथ

# स्पन्दसंदोहः ।



श्रीमन्महामाहेश्वराचार्यवर्य-श्रीक्षेमराजाचार्य-
विरचितः ।



अकलितमहिमा यः क्ष्मादिसादाशिवान्तं
कलयति हृदि विश्वं चित्रसंयोजनाभिः ।
प्रथयति च विचित्राः सृष्टिसंहारलीलाः ।
स जयति शिव एकः स्पन्दवान्स्वप्रतिष्ठः[1] ॥ १ ॥

---

(१) अकलित इति, न कलितः कलनाविषयीकर्तुमशक्यः स्वस्वरूपाद्बहिः इदन्तेयत्तायामप्रक्षिप्तो वा, महिमा विश्वाभिन्नपरामर्शमयस्वातन्त्र्यशक्त्यात्म ऐश्वर्यं यस्य । यश्च भूम्यादिसदाशिवपर्यन्तं भवाभवातिभवात्मकं विश्वं, हृदि निखिलप्रतिष्ठास्थानात्मचित्प्रकाशे, चित्रसंयोजनाभिः विविधोल्लेखपरामर्शनैः, कलयति उपादानादिसामग्रीनिरपेक्षमेव स्वानतिरिक्तत्वेऽपि अतिरिक्ततया दर्पणे प्रतिबिम्बवदवभासयति । यश्च विचित्रा एव सृष्टिसंहारलीलाः – आभासन-रक्ति-विमर्शन- बीजावस्थापन-विलापनात्मपञ्चविधकृत्यानि प्रख्यापयति । स एकः निर्णीतनीत्या अवभासितविश्वलीलाप्रपञ्चान्तर्बहिश्चा-

चैतन्याब्धेः प्रसरदमृतं त्रोटितायासतन्त्रं
सर्वस्यान्तः स्फुरदपि महामुद्रया मुद्रितं यत् ।
पूर्णानन्दप्रदमतितरामेतदुन्मुद्य युक्त्या
योऽन्तर्वक्रं रसयति जयत्येष वीरः कुलेन्द्रः ॥२॥

र्यपि अद्वैतस्वरूपः सन्, स्वाभिन्नस्वातन्त्र्यशक्तिसमवेतः स्वस्वरूपविश्रान्त्यवस्थितः, समुद्र इव विश्वकल्लोलप्रसरेऽपि अविचलत्स्वस्वरूपावस्थानः, सर्वोत्कृष्टतया प्रस्फुरति इति ॥ १ ॥

( १ ) प्रथमेन परां देवतां परामृश्य अपरां देवतां परामृशति चैतन्याब्धेरिति, प्रकाशानन्दसामरस्यात्मचित्स्वरूपसमुद्रसकाशात् अविच्छिन्नप्रवाहपरिपाट्या निःसरणशीलं यत् अलौकिकं निरतिशयस्वात्मानन्दमयममृतम् उन्मूलितभवकदर्थनाव्यूहम्, यच्च सर्वस्य सप्तविधप्रमातृवर्गस्य ध्यानपूजादिपारतन्त्र्यदूषितनियन्त्रणाराहित्येनैव स्वभावतः अन्तरुन्मिषदपि सत् महामुद्रया अज्ञातया शाम्भवमुद्रया निरोधावस्थामापादितम्, तदेतत् अमृतं निरतिशयपूर्णाहन्ताह्लादाधायि युक्त्या परमशिवशक्तिपातोन्मिषच्छाम्भवाद्युपायपरिशीलनेन सम्यक् अपुनरन्तरायापत्ति यथा, तथा उन्मुद्य स्वोपभोगविधित्सया प्रोद्घाट्य, यः अन्तर्वक्रं बाह्यवृत्त्युल्लाससंकोचपुरःसरमन्तर्मुखतया योगिनीहृदयापरपर्यायपरशक्तिधाम्नि आस्वादयति, स एष वीरः दलितत्रिविधपाशबन्धः, कुलस्य करणेश्वरीचक्रस्य प्रसरसंकोचाधायित्वेन अधीश्वरतया देदीप्यमानो जयति ।

पं० ४ क० पु० वक्रे इति पाठः ।

उन्मीलितं स्पन्दतत्त्वं महद्भिर्गुरुभिर्[2]यतः ।
तत एव तदाभोगे[3] किंचित्कौतुकमस्ति नः ॥ ३ ॥



तत्र आद्यमेव सूत्रं विमृश्यते, परमाद्वयप्रकाशानन्दमयमहेश्वरस्वरूपप्रत्यभिज्ञापनाय समस्तशास्त्रार्थगर्भां समुचितां स्तुतिमिमामुपदिदेश श्रीमान् वसुगुप्तगुरुः

यस्योन्मेषनिमेषाभ्यां
जगतः प्रलयोदयौ ।
तं शक्तिचक्रविभव-
प्रभवं शंकरं स्तुमः ॥ १ ॥

शम् अशेषोपद्रव[4]रहितपरमानन्दाद्वयचैतन्यप्रकाशप्रत्यभिज्ञापनात्मकम् अनुग्रहं करोति यः तं स्वात्मपरमार्थं शंकरं स्तुमः[5] — समस्तदेहप्राणादिपरिमितप्रमातृपदमधस्पदीकृत्य

---

अथ च यथा लौकिकममृतं क्षीराब्धौ स्फुरदपि अन्तर्निगूढतया नियतिशक्त्या नियमितमासीत्, तदपि युक्त्या मन्थनादिपरिशीलनेन निःसार्य सर्वदैवतेन्द्र आस्वादयन् अधिगतपूर्णानन्दसद्भावादपगतजरामरणादिकदर्थनः समपादि इति ॥ २ ॥

---

( १ ) रहस्यात्मतया अनुशिष्टम् ।
( २ ) श्रीवसुगुप्ताचार्यपादैः ।
( ३ ) तच्चमत्कारप्रकाशने ।
( ४ ) उपद्रवो भेदप्रथनात्मकः ।
( ५ ) स्तुम इत्यत्र कर्तृपदापेक्षायां वयमिति पदं बोध्यम् ।

---

पं० १ ख० पु० स्पन्दशास्त्रमिति पाठः ।
पं० ९ क० पु० शंकरं नुमः इति पाठः ।

विकल्पाविकल्पादिरूपासु सर्वासु दशासु सर्वोत्कृष्टतया परामृशामः । बहुवचनम् आत्मीकृताशेषानुग्राह्यजनाभेदप्रथनाय । तम् इति च असाधारणस्वरूपप्रत्यभिज्ञापनाय । कोऽसौ शंकरः ? इत्याह यस्योन्मेष इति । अत्र एके स्वरूपप्रकाशनतद्गोपनाभ्यां यत्कर्तृकाभ्याम् उन्मेषनिमेषाभ्यां जगतो विश्वस्य प्रलयोदयौ विनाशसर्गौ इति व्याख्यातवन्तः तदेके न सेहिरे, तथाहि – उन्मेषनिमेषौ कादाचित्कौ कादाचित्कजगन्नाशोदयहेतू कथं नित्ये भगवति स्याताम् ? अत उन्मेषनिमेषधर्मकजगत्कारणत्वात् एकैव भगवच्छक्तिः उन्मेषनिमेषशब्दाभ्यां व्यवह्रियते । तथा च यथासंख्यं त्यक्त्वा यथासंभवं यस्य उन्मेषात् जगदुदयो, यन्निमेषात् च प्रलयः इति व्याचचक्षिरे । अत्रापि च शास्त्रार्थोपदेशदृशा शंकरस्वरूपाभिन्नस्य जगतोऽपि कथं कादाचित्कौ विनाशोदयौ भवेताम् ? इति तुल्ये प्रसङ्गे, यदि आभासपरमार्थानुसारेण तथाभासपरमार्थस्य शंकरस्वभावाभिन्नस्य जगतः तथाभासनमयावेव विनाशोदयौ इष्येते[3] उन्मेषनिमेषावपि

( १ ) कादाचित्कस्वरूपगोपनतत्प्रकाशनात्मधर्मवत्त्वात् सदा एकरूपस्य भगवतो नित्यताप्रसक्तेः ।

( २ ) तत्तद्विविधविश्ववैचित्र्येण प्रथमानं सर्वं वस्तुत आभासनमयमेव, आभासात् बहिः अनाभासनरूपम् अवस्तुत्वात् न किंचित् प्रथेतेत्यर्थः ।

( ३ ) परप्रकाशात्ममहेश्वरस्वातन्त्र्यस्वभावपञ्चकृत्यमयावेव ।

पं० ३ ग० पु० साधारणस्वरूपेति पाठः ।

पं० १२ ग० पु० यत् इति पदं नास्ति ।

पं० १३ ख० पु० उपदेशदिशा इति पाठः ।

पं० १४ ख० पु० परमार्थवादानुसारेणेति पाठः ।

पं० १५ क० पु० स्वरूपा भिन्नेति पाठः ।

तथाभासपरमार्थौ भगवति किं न इष्येते । कालोऽपि आभा-सनसारो, न तु तद्व्यतिरिक्तः कश्चित्, इति कथमसौ वराकः आभासयितरि भगवति भेदशंकास्पदम् ।

'एकचिन्ताप्रसक्तस्य' ( ३।९ )

इति च उन्मेषलक्षणमत्रैव अस्ति । तदनुसारेण च निमेष-लक्षणमपि स्वरूपगोपनारूपमूह्यम् इति यथासंख्येऽपि न क्षतिः इत्यपरे । तदलमाख्यायिकावर्णनेन । प्रकृतमुच्यते – यस्यो-न्मेष इति । इह परमेश्वरस्य महाप्रकाशात्मनो विमलस्यापि एकैव परामर्शशक्तिः किंचिच्चलत्ताभासरूपतया स्पन्दः इति, स्फुरत्ता इति, ऊर्मिः इति, बलम् इति, उद्योगः इति, हृदयम् इति, सारम् इति, मालिनी इति, परा – इत्याद्यन-न्तसंज्ञाभिः आगमेषु उद्घोष्यते। सा च एकापि युगपदेव उन्मेषनिमेषमयी । तथाहि – सदाशिवादिक्षितिपर्यन्तस्य तत्त्वग्रामस्य प्राक्सृष्टस्य या संहारापेक्षया निमेषभूः सैव स्रक्ष्यमाणभेदापेक्षया उन्मेषदशा । प्राक्सृष्टभेदसंहाररूपा च या निमेषदशा सैव चिदभेदप्रथाया उन्मेषभूः । भेदासूत्रण-

( १ ) उन्मेषनिमेषयोः पौर्वापर्यप्राणितः कालो भेदशङ्काकारित्वेन प्रसक्तोऽपि आभाससारतापरमार्थत्वात् तदन्तर्निमग्न एव नैव भेत्तुमलम् ।

( २ ) एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः ।
उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥ ३–९ ॥

( ३ ) अचलस्य चिदब्धेः ईषत् विश्वस्फुरत्तात्मनामूर्मीणाम् आभासनात् ।

( ४ ) स्रक्ष्यमाणनीलसुखादिभेदप्रथनस्य इत्यर्थः ।

पं० ६ क० पु० गोपनमूह्यमिति पाठः ।
पं० ८ ग० पु० महत्पदं नास्ति ।
पं० ९ क० ग० पु० चलाभासेति पाठः ।
पं० १६ ख० पु० प्रथायामुन्मेषभूः इति पाठः ।

रूपा च या उन्मेषदशा सैव चिदभेदप्रथाया निमेषभूः ।[1] मायापदेऽपि च नीलदिदृक्षात्मप्राग्भूमिरूपा[2] उन्मेषावस्थैव स्फुरितनीलपूर्वपीतावभासनविश्रान्त्यात्मकनिमेषरूपा सर्वस्य स्वसंवित्सिद्धा । अपि च इयं दिदृक्षाभूमिः नीलस्य इदन्ता-वभासनासूत्रणस्वभावोन्मेषरूपापि, तदैव तस्यैव परमेश्वरा-भिन्नस्वभावनिमेषपरमार्थापि, वस्तुतस्तु मायापदेऽपि निमे-षोन्मेषोपलक्षितसर्वशक्तिविलोलतारूपा इयं परा विमर्शभू-[3]मिरेव सर्वदा सर्वस्य स्फुरन्त्यपि मायादशायां न निरूढिं लम्भयति संविदं स्वात्मनि, तत्रापि मध्ये मध्ये प्रकटीभवति । यत्स्वरूपाभिज्ञानाय स्फुटयिष्यति

'अतिक्रुद्ध·········।'[4] ( १।२२ )

इत्यादि

---

( १ ) देहप्राणादिषु अहन्ताभिमननस्वीकरणात्मनि ।

( २ ) दिदृक्षैव सिसृक्षा, सैव प्राग्भूमिः इच्छारूपा, स एवोन्मेषः ।

( ३ ) 'लोलीभूता परा स्थितिः' इति नीत्या निमेषोन्मेषयोरेव सृष्टिसंहा-रूपयोः अन्तर्गता विश्वशक्तयः इत्याशयः ।

( ४ ) अतिक्रुद्धः प्रहृष्टो वा किं करोमीति वा मृशन् ।
धावन्वा यत्पदं गच्छेत्तत्र स्पन्दः प्रतिष्ठितः ॥ २२ ॥
यामवस्थां समालम्ब्य यदयं मम वक्ष्यति ।
तदवश्यं करिष्येऽहमिति संकल्प्य तिष्ठति ॥ २३ ॥
तामाश्रित्योर्ध्वमार्गेण सोमसूर्यावुभावपि ।
सौषुम्नेऽध्वन्यस्तमितौ हित्वा ब्रह्माण्डगोचरम् ॥ २४ ॥
तदा तस्मिन्महाव्योम्नि प्रलीनशशिभास्करे ।
सौषुप्तपदवन्मूढः प्रबुद्धः स्यादनावृतः ॥ २५ ॥

---

पं० १ ख० पु० प्रथायां निमेषेति पाठः ।
पं० ७ ग० पु० विसर्गभूमिरिति पाठः ।

'.........अनावृतः ॥' ( १।२५ ) इत्यन्तं श्लोकचतुष्टयम् । परशक्तिपातप्रकाशध्वस्तमायावरणस्य तु शिवपदावाप्तौ करालम्बनं ददत्येव परं पूर्णतया सर्वदा न परिस्फुरति। यद्वक्ष्यति

'यदा क्षोभः प्रलीयेत.........'[1] ( १।९ )

इत्यादि

'.........करोति च ॥'( १।१० ) इत्यन्तम् ।

तथा 'जाग्रदादि...(१-३)इत्यारभ्य' 'तदस्ति परमार्थतः[2] ।' (१-५) इत्यन्तम्। तथाहि[3]–यदा प्रथमायाः शिवात्मनः सामरस्यभूमेः पूर्णाहन्तात्मसामरस्यावस्थितं विश्वं यदि न भवति अविद्यमानं कथं सृज्येत, नीलेदिदृक्षारूपा तुटिपातापरपर्याया दशा उदिता, तदा नीलमात्रापेक्षया अहन्ताच्छादितेदन्तासूत्रेणरूपा तावती सदाशिवेश्वरता उच्यते । तदैव सैव च

( १ ) यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ॥ ९ ॥
तदास्याकृत्रिमो धर्मो ज्ञत्वकर्तृत्वलक्षणः ।
यतस्तदीप्सितं सर्वं जानाति च करोति च ॥ १० ॥

( २ ) जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति ।
निवर्तते निजान्नैव स्वरूपादुपलब्धृतः ॥ ३ ॥
अहं सुखी च दुःखी च रक्तश्चेत्यादिसंविदः ।
सुखाद्यवस्थानुस्यूते वर्तन्तेऽन्यत्र ताः स्फुटम् ॥ ४ ॥
न दुःखं न सुखं यत्र न ग्राह्यं ग्राहको न च ।
न चास्ति मूढभावोऽपि तदस्ति परमार्थतः ॥ ५ ॥

( ३ ) प्रथमकलायां पूर्णाहन्ताख्यायां यदि तत्सामरस्यावस्थितं विश्वं नास्थास्यत् तत् कथमविद्यमानमस्रक्ष्यत इति । अतः प्राक्सृष्टेः स्वरूपाभिन्नस्य विश्वस्य सत्ता अवश्यमभ्युपेया इत्ययमाशयः, उन्मेषस्वरूपाभिज्ञापनाय स्पष्टीक्रियते ।

( ४ ) विश्वसिसृक्षाया उपलक्षणमेतत् ।
( ५ ) स्रक्ष्यमाणेदन्ताया आसूत्रणदशा ।

पं० ३ ख० ग० पु० ददात्येवेति पाठः, ग०पु० पूर्णतया स्फुरतीति च पाठः ।
पं० ९ ख० पु० शिवादिसामरस्येति पाठः ।
पं० ११ ख० पु० दशोदेतीति पाठः ।

पूर्णाहन्तात्मसामरस्यावस्थितविश्वापेक्षया शिवतापि, यदि हि अन्या सदाशिवप्रकाशात्मतया नावस्थिता स्यात् कथम् उत्तरकालं सृज्येत चिद्रूपव्यतिरेकेण अन्यस्य स्रष्टृत्वानुपपत्तेः । प्रमापितं च एतत् प्रत्यभिज्ञायाम्

'चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद्बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत् ॥' (१।५।७)

इति । इहापि वक्ष्यति

'यत्र स्थितमिदं विश्वं कार्यं यस्माच्च निर्गतम्' ( १।२ )

इति । ते च एते शिवतासदाशिवेश्वरते परस्परव्याप्त्या अवस्थिते एकरूपे एव । यदा तदा इति हि उपदेश्यापेक्षया वाचि क्रमोऽयं, न वस्तुनि । अत एव युगपदेव इयं संवित् स्रष्ट्री च संहर्त्री च इति सक्रमाभासा, अस्रष्टृसंहर्तृरूपा शुद्धाहन्ताप्रकाशमयी अक्रमापि इत्यलम् । उपदेशधना एव एनां भूमिं चिन्वते इति। इहापि च

'दिदृक्षयैव……[3]'( ३।११ ) इत्यत्र सूत्रे
'तमधिष्ठातृभावेन[4]……'( १।११ )

---

( १ ) चिद्रूपात् व्यतिरिक्तस्य मायाप्रकृत्यादेः भेदाभेदविकल्पोपहतत्वात् नास्ति स्रष्टृत्वोपपत्तिः । तथा हि चित्प्रकाशात् भिन्नत्वे अप्रकाशमानत्वेन असत्त्वात्, अभेदे तु प्रकाशमानतया चिन्मयतासिद्धेः ।

( २ ) उपदेश्यावबोधनाय अनाख्यस्वरूपात् आरभ्य शिवादिभूम्यन्ततत्त्ववर्णनक्रमः । वस्तुतोऽक्रममेव विश्वप्रथनं परमार्थमयमेव इत्याशयः ।

( ३ ) दिदृक्षयेव सर्वार्थान्यदा व्याप्यावतिष्ठते ।
तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते ॥ ३–११ ॥

( ४ ) तमधिष्ठातृभावेन स्वभावमवलोकयन् ।
स्मयमान इवास्ते यस्तस्येयं कुसृतिः कुतः ॥ १–११ ॥

---

पं० १ क० ग० पु० यदि हि अन्तः स तदा शिवप्रकाशे ति पाठः ।
पं० ४ क० ग० पु० प्रसाधितं चेति पाठः ।
पं० ७ क० पु० इहापि लक्ष्यते इति पाठः ।
पं० ११ ख० पु० अयमिति नास्ति ।

इत्यत्र च अयमेव उपदेशार्थः ।

'सदा सृष्टिविनोदाय ... ... ... '।
'प्रतिक्षणमविश्रान्तः ... ... ... '।
'प्राकाम्यमात्मनि यदा ... ... ... '।

इत्यादौ च गुरूणामयमेव आशयः । अस्ति च आगमः

'लेलिहाना सदा देवी सदा पूर्णा च भासते ।
ऊर्मिरेषा विबोधाब्धेः शक्तिरिच्छात्मिका प्रभोः ॥'

इति । एवमियम् एकैव अविभागा विमर्शभूमिः उन्मेषनिमेषमयी उन्मेषनिमेषशब्दाभ्यामभिधीयते । ततश्च उन्मेषौ च निमेषौ च इति विगृह्य उन्मेषस्य निमेषमयस्य, निमेषस्य च उन्मेषमयस्य, प्राधान्येतरताविभक्तस्य धरण्यादि-सदाशिवान्तं जगत् प्रति प्रलयोदयहेतुत्वं व्याख्यातव्यम् । एवं च प्रलयौ च, उदयौ च इति विगृह्य प्रलयोदयौ इति व्याख्येयम् । तथाहि – नीलादेः यो बहीरूपताया उदयः स एव अहन्तारूपतायाः प्रलयः, एवं यो बहीरूपतायाः प्रलयः स एव अहन्तारूपताया उदयः इति प्रलयोऽपि उदयरूपः, उदयोऽपि प्रलयपरमार्थः । भेदाभेदप्रा-

---

(१) सदा सृष्टिविनोदाय सदा स्थितिसुखासिने ।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः ॥
इति स्तोत्रावलौ । स्तवचिन्तामणौ च
प्रतिक्षणमविश्रान्तस्त्रैलोक्यं कल्पनाशतैः ।
कल्पयन्नपि कोऽप्येको निर्विकल्पो जयत्यजः ॥

(२) कृशतायामपि पूर्णैव राजते इत्यर्थः ।

---

पं० ८ क० पु० उन्मेषनिमेषमयीति वाक्यं नास्ति ।
पं० १२ क० ग० पु० प्रतिशब्दो नास्ति ।

धान्येतरताकृतस्तु अत्र विवेकः । वस्तुतः चिदात्मैव तथा भाति इति अक्रमतैव अत्र इत्युक्तम् । समासश्च इत्थमेव उपपन्नः । तथा च द्वन्द्वसमासे भाष्यम्

'यदि निदर्शयितुं बुद्धिः एवं
निदर्शयितव्यम् धवौ च खदिरौ च।'

इत्यादि । इहैव[1] च स्वतन्त्रशिवाद्वयदर्शने एकैकस्य अर्थस्य अनेकत्वं संगच्छते। अन्यत्र हि प्रतिनियतरूपा भावाः इत्येकोऽपि द्व्यर्थः, अपरोऽपि द्व्यर्थः इति का संगतिः इत्यलम् अप्रकृतेन। एवं च व्याख्याते सति यत् पञ्चविधकृत्यकारित्वं श्रीस्वच्छन्दादिशास्त्रेषु परमेश्वरस्य उच्यते, तदपि[2] स्वीकृतम् । तथा च – भेदासूत्रणतदुल्लासनरूपेण उन्मेषेण[3] किंचित्स्वरूपनिमेषमयेन शुद्धाशुद्धरूपा द्विविधा षडध्वनः सृष्टिः । एवं द्विविधभेदनिमेषेण किंचिदभेदस्पृगूर्ध्वोन्मेषणरूपेण संहारः । तथा उन्मेषनिमेषाभ्यां लोलीभूताभ्याम् आभासनानाभासनप्रसरपरमार्था स्थितिः । यथोक्तम्

'.... ... ... ... लोलीभूता परा स्थितिः ।'

---

( १ ) प्रकाशमयतापरमार्थवादानुसृत्या एकस्यैव अर्थस्य षट्त्रिंशत्तत्त्वमयतात्मानेकार्थत्वम् आम्नातमस्ति ।

( २ ) उन्मेषनिमेषाभ्यां परमेश्वरस्य सर्गादिपञ्चविधकार्यमपि स्वीक्रियते ।

( ३ ) निर्विकल्पसविकल्परूपेण उन्मेषेणेत्यर्थः ।

---

पं० ७ ख० ग० पु० अनेकार्थत्वं संगतमिति, रूपाभावादिति च पाठः ।

पं० ८ ख० पु० कथमपरोपि व्यर्थ इति पाठः ।

पं० १२ ख० पु० शुद्धतया द्विविधेति पाठः ।

पं० १४ ख० पु० लोलीभूतभासताभासतेति पाठः ।

इति सिद्धपादैः । तथा उत्पन्नस्वरूपोन्मेषाभासरूपो वस्तुतो निरयादिभोगमयो यः पूर्णो निमेषः स्वस्वरूपस्य स विलयः। सर्वात्मना पुनः यः पूर्णः उन्मेषः स चाशेषभेदोपशमना-न्निरूपितपूर्वर्द्धितो निमेषमयः, सोऽनुग्रहः इति परमेश्वरस्य पञ्चविधकृत्यकारित्वम् अनेनैव स्पृष्टम् । इत्थं प्रलयोदयावपि संगमनीयौ । प्रलयादिकं च आभास्यनिष्ठं आभाससारमेव, न तु प्रकाशात्मनोऽस्य परमेश्वरस्य तत् किंचित् । यद्वक्ष्यति

'अवस्थायुगलं चात्र ... ... '( १-१४ )

इत्यारभ्य ।

'... ... ... ... ... कर्तृत्वं...।' ( १-१४ )

इत्यन्तम् । मायाप्रमातृभूमावपि परमेश्वरस्य प्रकाशात्मनः इदं पञ्चविधकृत्यकारित्वं स्थितमेव, पूर्णं तु तत्संबन्धसावधानविज्ञानशालिसंवेत्यम् । एवंभूतस्य हि भगवतो नीलप्रकाशादिकाले नीलाभासे देशकालसंभिन्ने स्रष्टता, देशकालाकारान्तरसंभिन्नशंकायां

( १ ) संस्कारविगलनेन सर्वभेदनाशे सति, यत्र नष्टस्य भेदस्यापि संस्कारो विनश्यति स तादृशः पूर्णोन्मेषात्मा, सृष्टि-स्थिति-संहार-विलयेषु अन्योन्यस्य संस्कारशेषता, विना अनुग्रहं वस्तुतो दुरुच्छेद्या, सैव हि संसारकारणम् ।

( २ ) अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।
कार्यता क्षयिणी चात्र कर्तृत्वं पुनरक्षयम् ॥

( ३ ) तत्र ग्राह्यग्राहकसंबन्धावधानवद्भिरवगम्यते पूर्णम् ।

पं० १ ख० पु० पूज्यपादैरिति पाठः ।
पं० २ ग० ङ० पु० निरयस्वर्गमय इति पाठः ।
पं० ५ क० पु० स्पष्टमिति, इत्थं तयेति च पाठः ।
पं० १३ क० पु० एकीभूतस्येति पाठः ।

संहारः, प्राक्सृष्टे नीलाद्याभाससामान्ये स्थितिहेतुता, तत्रैव अभेदांशसर्गे विलयहेतुता इत्यादि पीताभासादावपि योज्यम् । तथा प्रथमाभासितनीलतद्ग्राहकभावापेक्षया संहर्तृत्वम्, अवभासमानपीततद्ग्राहकभावापेक्षया स्रष्टृत्वम्, विच्छिन्नताभासाद्यपेक्षया स्थितिहेतुता, अन्तःसंस्काररूपतापादिताभासापेक्षया विलयकारित्वम्, शुद्धसंविदैक्यापन्नप्रविलापितस्मृत्यादिबीजभावाभासापेक्षया अनुग्रहीतृत्वम् इत्येवं सर्वदा सर्वासु दशासु पञ्चविधकृत्यकारित्वं माहेश्वरमेव एकरूपं सर्वत्र जृम्भमाणमवस्थितम् इति । तत्रैव चिच्चक्रैश्वर्यात्मनि स्वस्वभावे शंकररूपे स्वप्रकाशे केषांचिदेव अनुत्तरसमाधिधनानां धिषणा अधिरोहति, न तु अन्येषां देहाद्यहंभावभाविनाम् । यदुक्तं भर्गशिखायाम्

> ‘ वीरभैरवदेवोऽपि परमानन्दविग्रहः ।
> उदेति मोहपङ्काङ्के पशुहृत्कुहरे कथम् ॥ ’

इति । एवं च व्याख्यातोपदेशप्रकारः इहैव अग्रे स्फुटीभविष्यति

---

( १ ) नीलभावप्रमितिभाजः ।
( २ ) सृज्यमानपीतवस्तुनः ।
( ३ ) भेदावभासमानपदार्थस्य ।
( ४ ) चित्स्वरूपाभिन्नतां प्राप्तस्य ।
( ५ ) वस्तुतः तथा तथा माहेश्वर्यमेव पञ्चधा सृष्ट्यादिविचित्रक्रीडया विलसतीत्यर्थः ।
( ६ ) चिच्चक्रं चित्स्वरूपस्य तथा तथा विश्वरूपतया स्फुरणं, तदेव ऐश्वर्यं तदात्मैव शंकरः । तत्र कैश्चिदेव योगिभिः विश्रान्तिरासाद्यते इत्यर्थः ।

---

पं० २ क० ग० पु० अभेदांशस्पर्शे इति पाठः ।
पं० ९ ख० पु० सर्वदा जृम्भमाणमिति पाठः ।

'जाग्रदादि... ... ... ... ... ...' (१–३)

इत्यारभ्य

'तदस्ति परमार्थतः ... ... ... ... ।।' (१–५)

इत्यत्र । तथा

'तस्योपलब्धिः सततं त्रिपदाव्यभिचारिणी।' (१–१७)

'अतः सततमुद्युक्तः स्पन्दतत्त्वविविक्तये।' (१–२१)

'इति वा यस्य संवित्तिः ... ... ... ...'[२] (२–५)

'प्रवुद्धः सर्वदा तिष्ठेत् ...'[३] ... ... ... ....' (३–१२)

इत्यादिस्थानेषु । ग्रन्थप्रान्ते च इदमेव संहरिष्यति ।

'यदा त्वेकत्र संरूढस्तदा तस्य लयोद्भवौ ।
नियच्छन्भोक्तृतामेति ततश्चक्रेश्वरो भवेत् ।।' (३ । १९)

इति । लयोदयौ हि अत्र व्याख्यातैपरमार्थावेव । इदमेव च चक्रैश्वर्य – यत् सर्वदा पञ्चविधकृत्यकारिचिन्मयस्वरूपा-

---

(१) जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति ।
निवर्तते निजान्नैव स्वभावादुपलब्धृतः ॥ ३ ॥
अहं सुखी च दुःखी च रक्तश्चेत्यादिसंविदः ।
सुखाद्यवस्थानुस्यूते वर्तन्तेऽन्यत्र ताः स्फुटम् ॥ ४ ॥
न दुःखं न सुखं यत्र न ग्राह्यो ग्राहको न च ।
न चास्ति मूढभावोऽपि तदस्ति परमार्थतः ॥ ५ ॥

(२) इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत् ।
स पश्यन्सततं युक्तो जीवन्मुक्तो न संशयः ॥ २–५॥

(३) प्रबुद्धः सर्वदा तिष्ठेज्ज्ञानेनालोच्य गोचरम् ।
एकत्रारोपयेत्सर्वं ततोऽन्येन न पीड्यते ॥ ३–२ ॥

(४) लय उदयपरमार्थः, उदयोऽपि लयपरमार्थः इति उभयमपि परमार्थ-प्रकाशमयम् ।

वस्थानम् इति अलं कतिपयजनहृदयाश्वासदायिनीभिः कथाभिः ।

अपि च यस्य चिदानन्दघनस्य आत्मनः उन्मेषनिमेषाभ्यां स्वरूपोन्मीलननिमीलनाभ्यां 'यदन्तः तत् बहिः'[1] इति कृत्वा जगतः शरीररूपस्य, तदनुषङ्गेण च बाह्यस्यापि विश्वस्य, प्रलयोदयौ निमज्जनोन्मज्जने इति समावेशव्युत्थानापेक्षया यथासंख्येनापि योज्यम्[2] ।

ननु च श्रीमत्स्वच्छन्दाद्यागमोक्तप्रकारेण यथा ब्रह्मा[3]दीनां स्वापप्रबोधावस्थयोः तदधरवर्तिलोकानां व्यतिरिक्तानामेव प्रलयोदयौ भवतः, तथा परमेश्वरापेक्षयापि विश्वस्य व्यतिरिक्तस्यैव प्रलयोदयौ इति तावत् उक्तम् । दृष्टं हि कुम्भकारादीनां व्यतिरिक्तकार्यकारित्वम् इति प्रमाणसिद्धमेव किम् अभ्युपगम्यते, आहोस्वित् अन्यथा[4] ? इति संशयं शमयितुं विशेषणद्वारेण हेतुमाह । 'शक्तिचक्रविभवप्रभवम्' इति ।

'शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः ।'

---

( १ ) अनेन न्यायेन अन्तःस्थितमेव बहिः प्रकटीक्रियते इत्यर्थः ।

( २ ) चिदात्मनो यत् उन्मज्जनं स समावेशः, जगतो यत् उन्मज्जनं तत् व्युत्थानम्, अभिन्नताया यः उन्मेषः स जगतः प्रलयः ।

( ३ ) सत्यादिलोकवर्तिनाम् ।

( ४ ) अभेदरूपतया ।

---

पं० १ ख० ग० पु० हृदयाश्वासिनीभिरिति पाठः ।

पं० १० क० पु० लयोद्भवौ इति पाठः ।

पं० ११ ख० पु० तावद्युक्तमिति पाठः ।

इत्यागमस्थित्या यावत् किंचित् आभासते, तत् सर्वं प्रकाशमयमेव – अप्रकाशस्य प्रकाशनानुपपत्तेः इति युक्तिवशेन स्वप्नसंकल्पादौ संविद एव आभासोल्लासनाहेतुत्वं दृष्टम् इति। अनुभवानुसारेण च प्रकाशस्यैव भगवतः प्रकाशमानं विश्वम् अस्य शक्तयः, तासां यत् चक्रं संयोजनादिवैचित्र्यव्यवस्थितः समुदायः, स एव विभवः स्फीतता, तस्य प्रभवः प्रभवति अस्मात् इति कृत्वा तथातथावभासनपरमार्थः स्वस्वभाव एव यः, तम् । यद्वक्ष्यति

'यस्मात्सर्वमयो जीवः सर्वभावसमुद्भवः ।
तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितः ॥' ( २ । ३ )

इति । तादात्म्यात् तत्संवेदनं, तस्मात् हेतोः इत्यादि ।

यद्वा शक्तिचक्रस्य इन्द्रियवर्गस्य, यो विभवो निजनिजविषयप्रवृत्त्यादिकः, तस्य प्रभवं प्राग्वत् । यतो वक्ष्यति

'यतः करणवर्गोऽयं[2] ... ... .... ।'
... ... ... ... प्रवृत्तिस्थितिसंहृतीः ॥'
लभते ... ... ... ... ।' ( १ । ६ )

इति ।

---

( १ ) विश्वसमुदायः ।

( २ ) यतः करणवर्गोऽयं विमूढोऽमूढवत्स्वयम् ।
सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः ॥

---

पं० ३ ख० पु० स्वसंकल्पादौ इति, उल्लासहेतुत्वमिति च पाठः ।

अथ च शक्तिचक्रस्य करणेश्वरीचक्रस्य यो विभवो विचित्रसृष्टिसंहारादिकारित्वं, तस्य प्रभवं क्रमार्थावभासनकारित्वकृतमक्रममहाप्रकाशमयम् । यद्वक्ष्यति

'सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः ॥
लभते ... ... ।' ( १. ६ )

इति आन्तरं चक्रम् अत्रैतदेव व्याख्येयम्, न तु अन्तःकरणत्रयम् – तस्य करणवर्गेणैव स्वीकृतत्वात् । करणवर्गस्य स्वात्मनः प्रवृत्त्यादिमात्रत्वम्, करणेश्वरीचक्रस्य तु सृष्ट्यादिकारित्वमेव प्रवृत्त्यादिलाभ इति व्याख्येयम् इत्यलम् ।

शक्तिचक्रं मन्त्रगणो मुद्रासमूहश्च, तस्य यो विभवः त्रिविधसिद्धिसाधनसमर्थत्वं, तस्य प्रभवम् इति प्रभवोपलक्षितोत्पत्तिविश्रान्तिस्थानम् । यद्वक्ष्यति

'तदाक्रम्य बलं मन्त्राः ... ...' ( २।१ )

इत्यादि

... ... .... .... निरञ्जनाः ( २।२ )

इत्यन्तम् । व्याख्यातेन च शक्तिचक्रविभवेन मन्त्रा-

( १ ) करणशक्तिवर्गस्य ।
( २ ) परापरमन्त्रमुद्रागणः शिवसूत्रादिषु बोध्यः ।
( ३ ) पर–परापर–अपरात्मिका त्रिधा सिद्धिः ।
( ४ ) तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः ।
प्रवर्तन्तेऽधिकाराय करणानीव देहिनाम् ॥
तत्रैव संप्रलीयन्ते शान्तरूपा निरञ्जनाः ।

पं० १ ग० पु० करणेश्वरीवर्गस्येति पाठः ।
पं० २ क० पु० कारित्वकृतमिति पाठः ।
पं० ३ क० पु० प्रकाशपात्रत्वमिति पाठः ।
पं० ९ ख० पु० प्रवृत्त्यादिक इति पाठः ।

दिसामर्थ्यात्मना प्रभा दीप्तिः यस्य साधकचित्तस्य, तत् वाति गच्छति प्राप्नोति अधितिष्ठति गन्धयति च विनाशयति स्वात्मनि विश्रमयति यः तम् । यत् स्फुटीभविष्यति ।

'सहाराधकचित्तेन ... ... .... '।' (२।२)

इत्यादि ।

शक्तिचक्रेण दीक्षानुग्रहध्येयसमापत्त्यादिना सामर्थ्यसंपद्वा विभवो यस्याचार्यस्योदयस्तस्य प्रभवं । यत् अभिधास्यति ।

'अयमेवोदयस्तस्य[3] ... ... ... (२।६)

इत्यादि

... ... ... ... ... शिवसद्भावदायिनी' (२।७)

इत्यन्तम् ।

अपि च शक्तयो ब्राह्मयादिदेव्यो ब्रह्मादिकारणमाला च, तासां संबन्धि चक्रं स्वभावशून्यपशुप्रमातुः अद्वयरूपोर्ध्वभूम्यवारोहणक्षमो भेदमयाधरसरणिसंचारचतुरश्च

(१) सहाराधकचित्तेन तेन ते शिवधर्मिणः ॥

(२) ध्यातव्यदेवतात्मना तादात्म्यम् ।

(३) अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि ।
तदात्मतासमापत्तिरिच्छतः साधकस्य या ॥
इयमेवामृतप्राप्तिरयमेवात्मनो ग्रहः ।
इयं निर्वाणदीक्षा च शिवसद्भावदायिनी ॥

(४) कादिक्षान्ततत्तद्वाचकात्मानः ।

(५) विस्मृतचित्स्वभावस्य पशोः ।

पं० ६ ख० पु० दीक्षाग्रहेति पाठः ।

पं० ७ क० पु० यस्याचार्यादेस्तस्येति पाठः ।

पं० १४ ख० पु० प्रभावशून्येति पाठः । क० पु० अद्वयतयेति च पाठः ।

पं० १५ ख० पु० भेदमयाधानेति पाठः । ग० पु० भेदमायाधारेत्ति पाठः ।

व्यूहः, तस्य यो विभवः तथाकार्यकारित्वं[1] तस्य प्रभवम् । यद्वक्ष्यति

'शब्दराशिसमुत्थस्य शक्तिवर्गस्य[2] ... ... '( ३ । १३ )

इत्यादि

'बन्धयित्री ... ...' ( ३ । १६ )

इत्यन्तम् ।

' तन्मात्रोदय ... ... ... ...[3] ( ३ । १७ )

इत्यादि

... ... ... ... ... प्रचक्ष्महे ॥'( ३ । १८ )

इत्यन्तं च । तस्यैव शक्तिचक्रस्य यो विभवः स्वस्वभावपदापेक्षया अधराधरभूत्यागेन ऊर्ध्वोर्ध्वारोहणक्षमता, तस्यापि प्रभवं प्राग्वत् । यदत्रैव वदिष्यति

'... स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥' ( ३।१६ )

---

( १ ) भेदमयाध्यवसायादि प्रसरनिपतनादि कार्यकरणशीलत्वम् ।

( २ ) शब्दराशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम् ।
कलाविलुप्तविभवो गतः सन्स पशुः स्मृतः ॥
परामृतरसापायस्तस्य यः प्रत्ययोद्भवः ।
तेनास्वतन्त्रतामेति स च तन्मात्रगोचरः ॥
स्वरूपावरणे चास्य शक्तयः सततोत्थिताः ।
यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः ॥
सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री...... ॥

( ३ ) तन्मात्रोदयरूपेण मनोऽहंबुद्धिवर्तिना ।
पुर्यष्टकेन संरुद्धस्तदुत्थं प्रत्ययोद्भवम् ॥
भुङ्क्ते परवशो भोगं तद्भावात्संसरत्यतः ।
संसृतिप्रलयस्यास्य कारणं संप्रचक्ष्महे ॥

इति । किं च शक्तिचक्रं खेचरी-गोचरी-दिक्चरी-भूचर्यादिः – बाह्यान्तरताभेदभिन्नो नानायोगिनीगणः, तदुपलक्षितो वीरव्रातश्च, तस्य यो विभवः अतीतानागतज्ञानाणिमादिप्राप्तिस्वविषयाभोगसमयपूर्णप्रथावाप्त्याद्यनन्तक्षुद्राक्षुद्रसिद्धिलाभम् ऐश्वर्यं प्राति पूरयति यः, स शक्तिचक्रविभवप्रः स च असौ भवो भवति तेन तेन रूपेण इति कृत्वा, तम् । यद्वक्ष्यति विभूतिस्पन्दे

'यथेच्छाभ्यर्थितो धाता ... [2] '( ३ । १ )

इत्यादिना

'कुतः सा स्यादहेतुका ॥' ( ३ । ८ )

---

( १ ) शक्तिचक्रोपलक्षितः शक्तिमतां संघः, विना शक्तिमन्तं शक्तीनां स्थित्यनुपपत्तेः ।

( २ ) यथेच्छाभ्यर्थितो धाता जाग्रतोऽर्थान् हृदि स्थितान् ।
सोमसूर्योदयं कृत्वा संपादयति देहिनः ॥
तथा स्वप्नेऽप्यभीष्टार्थान् प्रणयस्यानतिक्रमात् ।
नित्यं स्फुटतरं मध्ये स्थितोऽवश्यं प्रकाशयेत् ॥
अन्यथा तु स्वतन्त्रा स्यात्सृष्टिस्तद्धर्मकत्वतः ।
सततं लौकिकस्येव जाग्रत्स्वप्नपदद्वये ॥
यथा ह्यर्थोऽस्फुटो दृष्टः सावधानेऽपि चेतसि ।
भूयः स्फुटतरो भाति स्वबलोद्योगभावितः ॥
तथा यत्परमार्थेन यदा यत्र यथा स्थितम् ।
तत् तथा बलमाक्रम्य न चिरात्संप्रवर्तते ॥
दुर्बलोऽपि तदाक्रम्य यतः कार्ये प्रवर्तते ।
आच्छादयेद्बुभुक्षां च तथा योऽतिबुभुक्षितः ॥
अनेनाधिष्ठिते देहे यथा सर्वज्ञतादयः ।
तथा स्वात्मन्यधिष्ठानात्सर्वत्रैवं भविष्यति ॥
ग्लानिर्विलुण्ठिका देहे तस्याश्चाज्ञानतः सृतिः ।
तदुन्मेषविलुप्तं चेत् कुतः सा स्यादहेतुका ॥

इत्यन्तेन श्लोकाष्टकेन। श्रीवामेश्वर्याधिष्ठितानि खेचरी-गोचरी-दिक्चरी-भूचरी-चक्राणि आन्तराणि, बाह्यानि च व्याख्यायन्ते। यत्र वमन्ति विश्वं भेदाभेदमयं भेदसारं च, गृणन्ति उच्चैर्गिरन्ति च भेदसारं, भेदाभेदमयं च अभेदसारम् आपादयन्ति इति संसारवामाचाराः वामाः शक्तयः, तासाम् ईश्वरी स्वामिनी एकैव भगवती — तदधिष्ठितत्वात् वामाचक्रमपि वामेश्वरीचक्रम् अभिधीयते इति । खे बोधगगने चरन्ति इति खेचर्यः प्रमातृभूमिस्थिताः, परशक्तिपातपवित्रितानां चिदानन्दप्रसरोद्गमनसारा अकालकलितत्वादभेदसर्वकर्तृत्वसर्वज्ञत्वपूर्णत्वव्यापकत्वस्वरूपोन्मीलनपरमार्थाः । मायामोहितानां तु अनानन्दप्रदाः शून्यप्रमातृभूमिचारिण्यः काल-कला-शुद्धविद्या-राग-नियतिमयतया बन्धयित्र्यः । गौः वाक् तदुपलक्षितासु संजल्पमयीषु बुद्ध्यहंकारमनोभूमिषु चरन्ति इति गोचर्यः शक्तिपातवतां शुद्धाध्यवसायाभिमानसंकल्पप्ररोहिण्यः, परेषां तु विपर्यासिन्यः । दिक्षु च दशसु बाह्येन्द्रियभूमिषु चरन्ति इति दिक्चर्यः अनुगृहीतानां अद्वयप्रथनसाराः, परेषां तु द्वयप्रतीतिपातिन्यः । भूः रूपादिपञ्चकात्मकं मेयपदं, तत्र चरन्ति

---

( १ ) ईश्वर्याधिष्ठितत्वात् तत्स्थानां वामाख्यशक्तीनां तद्वत्सासर्थ्यात्वादात् ।

( २ ) स्वशक्त्यविभिन्नतया परामर्शनात् ।

( ३ ) मायाख्यया पारमेश्वर्या शक्त्या भेदप्रथामापादितानां संकुचितप्रमातृणाम् ।

---

पं० ७ क० पु० अभिधीयेतापि इति पाठः ।

पं० ११ ख० पु० अनानन्दप्रथाः इति पाठः ।

पं० १७ ख० पु० प्रथासारा इति पाठः ।

तदाभोगमय्य आश्यानीभावेन तन्मयताम् आपन्ना भूचर्यः प्रबुद्धानां चित्प्रकाशशरीरतया स्फुरन्त्यः, इतरेषां सर्वतो व्यवच्छेदकतां दर्शयन्त्यः। इत्येवं वामेश्वरीशक्त्या प्रसारितानि आन्तराणि अपरपरापरपरप्रथाहेतुत्वात् अघोर-घोरघोरतरनामनिरुक्तानि चत्वारि खेचरी-गोचरी-भूचरी-दिक्चरीचक्राणि तथाविधवीर[1]व्रातसहितानि तानि। यथोक्तं श्रीपूर्वशास्त्रे

'विषयेष्वेव संलीनानधोधः पातयन्त्यणून्।
रुद्रा[2]णून्याः समालिङ्ग्य घोरतर्योऽपराः स्मृताः॥
मिश्रकर्मफलासक्तिं पूर्ववज्जनयन्ति याः।
मुक्तिमार्गनिरोधिन्यस्ताः स्युर्घोराः परापराः[3]॥
पूर्ववज्जन्तुजातस्य शिवधामफलप्रदाः।
पराः प्रकथितास्तज्ज्ञैरघोराः शिवशक्तयः॥'

इति। बाह्यानि पुनरेतद्वामेश्वर्यधिष्ठितान्येव खेचरी-भूचरी-गोचरी-दिक्चरीचक्राणि। तत्र आकाशे चरन्त्योऽशरीराः खेचर्यः, यदिच्छामात्राधिष्ठितमिथुनसंप्रयोगजः प्रबुद्धशुद्ध-विद्योदयो योगिनीगर्भोद्भूतो भवति। यथोक्तं श्रीतन्त्रालोके

'अन्याश्च गुरुतत्पत्न्यः श्रीमत्कालीकुलोदिताः।
अनन्तदेहाः क्रीडन्त्यस्तैस्तैर्देहैरशङ्कितैः॥
प्रबोधिततादिच्छाके तज्जं कौलं प्रकाशते।'

---

( १ ) वीराः शक्तिमन्तः।

( २ ) रोदयन्ति पशून् अधःपातनेन, संसाररुजं द्रावयन्ति चेति वा रुद्राः।

( ३ ) भोगापवर्गात्ममिश्रकर्मणि या आसक्तिं जनयन्ति मुक्तिमार्गं च निरुन्धन्ति ता घोराख्याः परापरशक्तयः प्रोच्यन्ते इत्यन्वयः।

---

पं० ६ ग० पु० व्रतसंहितानि तानि इति पाठः।

पं० १७ ख० पु० विद्योदययोगिनीति पाठः।

पं० १८ ग० पु० कुलोचिता इति पाठः।

पं० २० क० पु० अबोधितेति, तज्जे कौले इति च पाठः।

इति । गोचर्यस्तु गोशब्दवाच्यपशुहृदयसाराहरणरताः तेनैव क्रमेण स्वात्मनः, पशूनां च तत्तत्सिद्धिसाधनप्रवणा एकजन्मनः प्रभृति सप्तजन्मान्तमपि पशुमाहरन्त्यः । दिक्चर्यस्तु भ्रान्तचक्रवत् सर्वत्र चरन्त्यः परापरसिद्धिप्रवणाः । भूचर्यस्तु स्वस्वभावतयैव कुङ्कुमनारिकेलादिवत् तत्तत्पीतादिभूमिजाताः पूर्णत्वापूर्णत्वादिनानाभेदितत्तद्देवतांशकोद्भूताः ।

अपि च शक्तिचक्रस्य आगमसंप्रदायप्रसिद्धनानादेवतापरमार्थस्य रागद्वेषक्रोधविकल्पादिप्रत्ययग्रामस्य, तथा देहाश्रिततत्तद्देवतापरमार्थनानाधात्वादिगणस्य, यो विभवः तत्तदुपनिषत्सिद्धः प्रभावविशेषः, मायामूढान् प्रति बन्धहेतुत्वं च, तस्य उभयस्यापि प्रभवम् । तदेतत् उपदेक्ष्यति

'गुणादिस्पन्दनिष्यन्दाः सामान्यस्पन्दसंश्रयात् ' ( १ । १९ )

इत्यादि ।

... ... ... .... संसारवर्त्मनि' ( १ । २० )

इत्यन्तम् । तथा

'सेयं क्रियात्मिका शक्तिः शिवस्य .... ... ( ३ । १६

इत्यादि । अन्यत्रापि आगमेषूक्तम्

---

( १ ) कुंकुमं पीतभूमौ, नारिकेलं भूमेरग्रभागे जायते इति प्रसिद्धिः ।

( २ ) गुणादिस्पन्दनिःष्यन्दाः सामान्यस्पन्दसंश्रयात् ।

लब्धात्मलाभाः सततं स्युर्ज्ञस्यापरिपन्थिनः ॥

अप्रबुद्धधियस्त्वेते स्वस्थितिस्थगनोद्यताः ।

पातयन्ति दुरुत्तारे घोरे संसारवर्त्मनि ॥

'कुलेसारमजानन्तो ह्यद्वये निपतन्ति ये।
स्वचित्तोत्थविकल्पान्धा निरये निपतन्ति ते॥'

इति। तथा

'येन येन निबध्यन्ते जन्तवो रौद्रकर्मणा।
सोपायेन तु तेनैव मुच्यन्ते भवबन्धनात्॥'

इति। एवंप्रायं च व्याख्यानं नानागमसंवादितमस्ति, ग्रन्थगौरवभयात् तु न लिखितम्, स्वयमेव च परशक्तिपातपवित्रितैः अनुसर्तुं शक्यम्। अन्येषां तु संवादशतैरपि प्रदर्श्यमानम् इदं वस्तुतत्त्वं निदाघातपतप्तशिलापतितजलबिन्दुवत् न क्षणमपि तिष्ठति इति अलम्।

अन्यच्च शक्तिचक्रस्य स्वतन्त्राद्वयनिजमहाप्रकाशानुप्रवेशकारिस्वमरीचिनिचयस्य, स्वामोदजृम्भात्मना विभवेन प्रकाशितहृदयसंतोषकारिण्यल्पा दीप्तिः, मितयोगिजनप्रयत्नसाध्यापि अयत्नेन स्वभावावष्टम्भमात्रसिद्धबिन्दुनादादिप्रकाशमयी क्षोभकत्वेन उत्थिता यस्य ज्ञानिजनस्य, तं वयति अनुत्तराद्वयसंवित्तन्तुसंतानितं संपादयति। यत्प्रथयिष्यति

'अतो बिन्दुरतो नादः·········।'

इत्यादि।

········क्षोभकत्वेन देहिनः॥'( ३। १० )

---

( १ ) कुलानां देहाक्षभुवनादीनां शक्तिरूपतया परिज्ञानमेव सारः।
( २ ) अतो बिन्दुरतो नादो रूपमस्मादतो रसः।
प्रवर्तन्तेऽचिरेणैव क्षोभकत्वेन देहिनः॥

---

पं० ११ क० पु० निजप्रकाशेति पाठः।
पं० १३ ख० पु० कारिणी प्रभा दीप्तिरिति पाठः।
पं० १४ क० पु० प्रयत्नप्राप्यासाध्ययत्नेनेति ग० पु० प्राप्या साप्ययत्नेति, सिद्धा विन्दु इति च पाठः।

इत्यन्तम् । एवंविधो यः तं शक्तिचक्रविभवप्रभवं व्याख्यातरूपं शंकरं स्वस्वभावं स्तुमः इति । एवमनेन श्लोकभागेन वर्तमानार्थोपक्षेपगर्भेण विश्वोत्तीर्णो विश्वमयश्च उत्तमाकुलत्रिकाद्याम्नायोपदेशादिशा स्वस्वभाव एव शंकरः इति उपपादितम्, न तु वेदान्तवादिवत् 'विश्वं यत्र तदेव ब्रह्म' इत्येवं प्रायं,

'नाभावो भाव्यतामेति[1]...... ' '। ( १ । १२ )

इत्यादिना

'न त्वेवं स्मर्यमाणत्वं तत्तत्त्वं प्रतिपद्यते ।' ( १ । १३ )

इत्यन्तेन निषेधात् । नापि सिद्धान्तदृष्टिवत् विश्वोत्तीर्णमेव परं तत्त्वम् इत्येवंरूपम्,

'तस्योपलब्धिः सततं त्रिपदाव्यभिचारिणी ।' ( १ । १७ )

इत्यादिविरुद्धत्वापत्तेः । नापि अप्रकटिताकुलस्वरूपकुलप्रक्रियाशास्त्रवत् विश्वमयमेव पूर्णं रूपम् इत्येवं स्वभावम् ।

'यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ।' ( १ । ९ )

इत्याद्यसंगतेः । इति समस्तशास्त्रार्थं वाक्यैकवाक्यतया पर्यालोच्य सर्वदा सर्वासु दशासु दृढशंकरात्मकस्वस्वभावप्रतिपत्त्या अवस्थातव्यम्, न तु अत्र मनागपि अवज्ञा विधेया। अख्यातिनिर्हरणायैव तु सर्वदा यत्न आस्थेयः, न तु सा दशाऽस्ति यत्र शिवता न स्फुरति इति उपदिष्टं भवति । यदादिष्टं परमेष्ठिना श्रीस्वच्छन्दादिशास्त्रेषु

'यत्र यत्र निलीयेत मनस्तत्रैव भावयेत् ।
चलित्वा यास्यति कुत्र सर्वं शिवमयं यतः ॥'

---

१ नाभावो भाव्यतामेति न च तत्रास्त्यमूढता ।
यतोऽभियोगसंस्पर्शात्तदासीदिति निश्चयः ॥
अतस्तत्कृत्रिमं ज्ञेयं सौषुप्तपदवत्सदा ।
न त्वेवं स्मर्यमाणत्वं तत्तत्त्वं प्रतिपद्यते ॥

---

पं० २२ ख० पु० तत्रैव धारयेदिति पाठः ।
पं० २३ क० पु० चलित्वा कुत्र गन्तासि इति पाठः ।

इति । इहापि वक्ष्यति

'न सावस्था न यः शिवः' ( २।४ )

इत्यादि । अस्ति च शिवसूत्रम्

'सकृद्विभातोऽयमात्मा पूर्णोऽस्य न क्वापि अप्रकाशसंभवः।'

इति । तथा

'चिद्घनमात्मपूर्णं विश्वम्'

इत्यादिना इति । व्याख्यातमिदं समस्तशास्त्रार्थासूत्रणपरमार्थमतिप्रसन्नगम्भीरमादिसूत्रं, करोतु सर्वस्य शिवम् ॥

शास्त्राब्धेरर्थमात्रं परिमितमतयः केऽपि संप्राप्य तुष्टाः
केचिन्नैवाप्नुवन्ति प्रविततयतनाः पारमस्यापरे तु ।
प्रोत्प्लुयन्तेऽर्धभागे तृणवदथ परे मज्जनोन्मज्जनाभिः
खिद्यन्तेऽन्ये तु नेतुं निखिलमिदमथाप्यर्थिपूद्वान्तमीशाः ॥१॥

स्मृतिपथजुषि यस्मिन्पाशबन्धप्रबन्धा
झटिति विघटितान्तर्ग्रन्थयो विश्लथन्ते ।
स्फुरति च चितिचन्द्रानन्दनिःष्यन्दिधारा-
मृतरसपरिषेकस्तं शिवं संश्रयामः ॥ २ ॥

सर्वत्र प्रतिबोधविद्धमहसो विद्याब्धिशीतद्युते-
र्हेलालोकनकर्ममोचितनतानन्तार्थिसार्थाद्गुरोः ।
श्रुत्वा सम्यगिदं प्रभोरभिनवात्स्मृत्वा च किंचिन्मया
क्षेमेणार्थिजनार्थितेन विवृतं श्रीस्पन्दसूत्रं मनाक् ॥ ३ ॥

इति स्पन्दसंदोहः समाप्तः ॥

कृतिर्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तपादपद्मोपजीविनो राजानकक्षेमराजस्य ॥

पं० १ क० ख० पु० इहापि भविष्यति इति पाठः ।
पं० १० क० पु० प्रविहितेति पाठः ।
पं० १२ क० पु० उद्धातुमीशा इति पाठः ।
पं० १५ ग० पु० निःष्यन्देति पाठः ।
पं० १९ क० पु० न किंचिदिति पाठः ।
पं० २० क० पु० विहितमिति पाठः ।

सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे हासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥
श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥
तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥
तिलकम् ।



श्रीशिवार्पणं भूयात् ।